# Recent Works of Dr. J. B. Chaudhuri

1. **A Comparative Study of the Commentaries on the Meghaduta** from ancient times to present Day.

2. **Works attributed to Srikrishna Caitanya Mahaprabhu.**

3. **Contributions of Bengal to Sanskrit Literature.** In four Volumes of 1,000 pages each.

4. Muslim Patronage to Sanskrit Learning. Vol. V.

## Sanskrit Dramas

5. **Bharata-Svatantrya-Andolanam** ( Based on the history of National Movements for Independence of India ).

6. **Palli-Kamalam** ( on Kamalā, a typical village-woman representing Indian womanhood )

7. **Samana-damanam** ( on Sāvitrī who repulsed Yama and brought back her husband to the world of the living ).

The first-ever Sanskrit Opera.

## Other Works

8. Akhyāna-mālā ( A series of short stories relating to Modern Life ).

9. **History of Sanskrit Literature during Muslim Rule in India.** ( A work to be completed in six volumes of 1,000 pages each ).

10. **A Bengali-Sanskrit and Sanskrit-Burmese-Bengali Dictionary.**

# शक्ति-सारदम्

[ नाटकम् ]

डक्टर-श्रीयतीन्द्रविमलचतुर्धुरीणविरचितम्

( नान्दी )

प्रणमामि विश्वमातरं शक्तिसारां
श्रीसारदां सुतहितैक-ध्यानपराम् ।
सीता-राधा-प्रिया-प्रपूर्णाकारां
सर्वयुगावतार-चिरक्षेमंकराम् ॥१॥

(नान्द्यन्ते) सूत्रधारः। अद्य पश्चिमवङ्गसर्वकारीयसंस्कृत-शिक्षापरिषत्-कर्तृ-पक्षैरादिष्टोऽस्मि यत् महाजनन्याः श्रीश्रीसारदामणेः पूतजीवनचरितं नाटेयन प्रयोक्तव्यमिति। तद्वयं सर्वकारीय-वङ्गीय-संस्कृत-शिक्षापरिषदध्यक्षेण डक्टर-श्रीयतीन्द्रविमलचतुर्धुरीणेन विरचितं शक्ति-सारदं नाम नाटकं प्रयोक्ष्यामहे।

( नटीमुद्दिश्य ) देवि ! इतस्तावत् त्वरितमागच्छ।

नटी। ( प्रविश्य ) इयमहमागताऽस्मि। क आदेशः ?

सूत्रधारः। न खल्वादेशः, भवत्याः कृपा मया याच्यते।

नटी। आर्य ! दयस्व।

सूत्रधारः। भारतवर्षस्य परमं सौभाग्यमिदं यदस्मिन्नेव देशे

करुणामयो भगवान् जगतः कालुष्यमपाकर्तुं वारं वारं शक्तिरूपिण्या जगज्जनन्या लीलागणेन च समम् अवतीर्णो भवतीति। तथाहि,

त्रेतायामवतीर्य वीर्यविदितः सीतापतिः कोशले
सीता-लक्ष्मण-मारुति-प्रभृतिभिर्लीलां चकारोज्ज्वलाम्।
श्रीमत्या सह राधया सह तथा श्रीदाम-रामादिभि-
र्लीलां कर्तुमवातरन्मधुपुरे कृष्णश्च स द्वापरे ॥२॥

नटी। यथेयं भागवती कथा मह्यं रोचते, न तथाऽन्या काऽपि। कलियुगविषयेऽपि वदतु भवान्।

सूत्रधारः। देवि! नारीणां धर्मप्रीतिरन्तःसलिला फल्गुरिव नितरां प्रवहति। तच्छृणु। कलियुगे सार्धद्विसहस्रवर्षेभ्यः प्राक् श्रीयशोधरया सह जन्म स्वीचकार भगवान् बुद्धदेवो यो धर्मं नवाकारेणोपदिदेश "बहुजनसुखाय बहुजनहिताय च"।

स हि भगवान् सर्वज्ञः कलापमिव शर्ववर्मणा रचितम्।
आद्यन्तमध्यमङ्गलमुपादिशद्धर्मं लोकहितार्थम् ॥३॥

नटी। अहो! अमिताभस्य मधुरिममयीम् अमितामृतकथां श्रुत्वा धन्याऽस्मि। ततस्ततः।

सूत्रधारः। ततः पुनः—

पादोन-पञ्चशतहायनतः पुरस्ताद्
भागीरथीसलिलशीतल-वङ्गभूमौ।
आविर्बभूव भगवान् प्रियया समेत-
श्चैतन्यदेव इति नामपदं पुनानः ॥४॥

जाने महावतरणकाले जननी स्वयं भगवतो हस्तधारणपूर्वकमेव समागच्छति भूतले।

नटी। आर्य! अपि भवान् वक्तुमिच्छति यद् [illegible]योऽसौ भगवान् रामः स एव कृष्णो बुद्धो महाप्रभुश्च। तथा या रामप्रिया सीता, सैव राधा यशोधरा विष्णुप्रिया चेति ?

सूत्रधारः। आर्ये! मम चित्तवृत्तेरनुधावनविषये त्वं सर्वथा पारं गताऽसि। अथवा स्वाभाविकोऽयं नारीणां धर्मः। तथाहि—

प्रणयाञ्जनपूतचक्षुषा
हृदयं यन्निखिलं विलोकते।
तदवैति सुखेन सुन्दरी
प्रियहृल्लग्नमशेषचेष्टितम् ॥५॥

नटी। परमशोभना खल्वार्यस्योक्तिः। किन्त्वीदृशीनां महाजननीनां चरित्रानुध्याने यथा सुखं परमा शान्तिश्च, तथैतासां नाटेय चरित्र-रूपायणे महत् कष्टं परमा भीतिश्च जायेते।

सहजसुभग-जीवनप्रणाली-
सुखसरणिव्रतिनीदृशी हि नारी।
चरितमधुरिमा ततो हि मातुः
कथमभिनीय करोमि सार्थकं तम् ॥६॥

सूत्रधारः। जगज्जनन्या अंशीभूतायास्ते कथं भीतिर्जायताम्? स्थिरसंकल्पायाः शक्तेराधारभूताया नार्या भीतिं नाहं स्वीकरोमि। नारीणां लज्जा तु बलीयस्येव।

लज्जा नाम कुलस्त्रीणामात्मरूपावगूहनम्।
पुरतो रामकृष्णस्य श्रीसारदामणेर्यथा ॥७॥

( इति प्रस्तावना )

———

# प्रथमोऽङ्कः

## प्रथमदृश्यम्

समयः—रात्रेर्नवमहोरा । स्थानम्—दक्षिणेश्वरकालीमन्दिरम् ।

पूजारतः श्रीरामकृष्णः । —( कालिकास्तुतिः । )

रामकृष्णः । चामुण्डा घोरहुङ्कारा चण्डमुण्डविनाशिनी ।
अष्टसखीसहाया त्वं शुम्भनिशुम्भसूदनी ।८॥
सृष्टेरादौ तमोरूपा कालिका वरवर्णिनी ।
अन्ते चापि महाकृष्णा घोररूपा कपालिनी ॥९॥
तन्त्रेषु त्वं परा शक्तिर्महामाया सनातनी ।
श्मशाने सुखसञ्चारा कालिका शिवभामिनी ॥१०॥
सहस्रारे महापद्मे पूर्णानन्द-विहारिणी ।
भक्तिमुक्तिप्रदा देवी दक्षिणा बन्धहारिणी ॥११॥

जननि भवतारिणि ! कथं मनो मे परमसंफुल्लमिव प्रजायते । कापि माङ्गलिकी घटना भाविनीव । जननि ! त्वमेव सर्वकल्याण-कारिणी, अघटनघटनंपटीयसी । कथमद्य मृदुमधुरं हससि ? ब्रूहि मां कस्ते हासाभिप्रायः ? अहो ! सर्वं बुद्धम्, अहं स्वयमेव गच्छामि ।

[ ततः प्रविशति जननी सारदामणिः पित्रा
श्रीरामचन्द्रमुखोपाध्यायेन सह ]

[ सारदा श्रीरामकृष्णं पितरं च प्रणमति ]

श्रीरामचन्द्रमुखोपाध्यायः । वत्स गदाधर ! बहोः कालादनन्तरं त्वां दृष्ट्वा नितरां प्रीतोऽस्मि । इयं मे कन्यका सारदा शीर्णा दीर्णा पथि च भूयोऽपि ज्वररोगाक्रान्ता पीड्यमानाऽस्ते । तथाप्ययमेव हर्षो यत् सारदा त्वत्समीपमानीतेति । योग्यपतिसन्निहिता अनाकुलप्रसादा कन्यका पितुरानन्दप्रकर्षं जनयति ।

हृद्यस्य पत्युः सविधे वसन्ती यं हर्षमाप्नोति तृणस्य गेहे।
हर्षं तथाभूतमुपैति साध्वी नारी न सौधेऽपि विधाय वासम् ॥१२॥

भगवांस्तथा करोतु यथा युवां जगतां दैन्यम् अपनयेतम्, का कथा मम, सारदाया जनन्याश्च।

रामकृष्णः। पितः! प्रणमामि भवन्तम्। भवताम् आशीर्वादैरेव आवयोर्जीवनसौन्दर्यम्। कथम् आसते जयरामवाटिकायां जननी अन्ये च सर्वे, कीदृशाश्च सर्वे कामारपुकुरे? कथं वा कन्यका ते असुस्थतां भजते?

रामचन्द्रः। कल्याणमस्तु ते पुत्र! देशे सर्वे कल्याणं भजन्ते।

रामकृष्णः। प्रथमसागता भवतां कन्यका; मन्ये मार्ग एव समतीतम् अशुभत्क्षणम्।

सारदामणिः। [स्वगतम्] अहो! आनन्दमूर्तिः पतिर्मम सुखमुद्दिश्यागमनसमयस्य प्राशस्त्यादिकं चिन्तयति। सत्यं कृतार्थाऽस्मि। कुतः—

पतिर्न पाणिग्रहमात्रतो भवेज्
जाया न जायेत च सप्तभिः पदैः।
परस्परं यावनुकूलचारिणौ
तौ दम्पती तौ च सुखाकरौ भुवि ॥१३

रामकृष्णः। हृदय! हृदो! अत्रागच्छ।

(प्रविशति हृदयः)

हृदयः। मातुल! किं मया करणीयम्?

रामकृष्णः। पितरं विश्रामस्थानं नय। मातुलानी तेऽत्रैव मे कक्षे स्थास्यति। असुस्था सा चिकित्सनीया। तस्मिन् क्षुद्रे कक्षे तस्या असौकर्यं भविष्यति। साऽत्र तिष्ठतु नाम।

सारदामणिः। [स्वगतम्] अहो, मत्सुखचिन्तनं स्नेह-करुणा-प्रीतिपरिपूरितस्य पत्युर्मे।

[ रामचन्द्रो हृदयश्च बहिर्गच्छतः ]

रामकृष्णः। [ सारदामुद्दिश्य ] तवागमनं परं शुभकरम्। किन्तु बहु विलम्बितं त्वया। यदि नामास्माकं "सेजबाबुः" अजीविष्यत्, त्वां प्रति सेवाशुश्रूषणादिव्यापारे न कापि त्रुटि-विच्युतिरभविष्यत्।

सारदा। [ स्वगतम् ] अहो! महान् मे आनन्दो यत् पतिर्मे स्थितप्रज्ञो महामुनिः सर्वं जागतव्यापारम् अनायास-सिद्धमिव उच्चारयति तथा व्यवहरति च।

रामकृष्णः। यदि शरीरं त्वां बाधते, तदा निद्रासुखं लभस्व।

सारदा। देव! सर्वं मे कष्टमपगतम्। नाहमस्वस्थाऽस्मि। त्वद्दर्शनानन्तरं कथं वास्वस्थता स्यात्। भवान् नितरां चिन्तयति सुखं मे। मया तु कदापि न चिन्तितमासीन् मम त्वत्सकाशागमनं सुष्ठु स्यान्न वेति। पुनर्यदा केचन जनास्ते शारीरमानसासुस्थता-निबन्धि वाक्यं कुत्सारूपेण वर्णयामासुः, तदाहं स्थिरसङ्कल्पाऽभवं मयाऽत्र ध्रुवमेवागन्तव्यमिति। स्नेहातुरः पिताऽपि मया सार्धमागतवान्।

रामकृष्णः। सुष्ठु समाचरितं त्वया! अहो स्नेहशीलत्वं पितुर्यत्तेनापि कृपया सुदीर्घं मार्गमतिक्रम्यास्मत्सकाशे समागतम्।

सारदा। नाथ! कथं नाहं चतुर्वर्षं यावद् आहूता? अपि त्वं रुष्टोऽसि यदहं त्वदादेशं विनैवात्रागतास्मि?

रामकृष्णः। त्वं कथं नाहूतेति? परन्तु काल एव बलवान्। कथं वा रोषः स्यात्? त्वं सुष्ठु समाचरितवती। आह्वानेऽपि कथं स्याद्वै-मत्यम्? भगवद्विषयकप्रबन्धे आह्वानस्य विरतिर्मे कदापि नास्ति। चतुर्वर्षं यावद् आसीद् आवयोः प्रस्तुतिसमयः। गते तस्मिन् काले त्वमागतवती।

यदुक्तं कथं नाहूतेति, तत्र वदामि—

आमन्त्रणं तव चिरस्य मदीयपार्श्वे
द्वारञ्च साध्वि विवृतं सदनस्य नित्यम्।
स्वाधीनता तव गतागतयोरिहास्ते
त्वं स्वेच्छया यदभिवाञ्छसि तत् कुरुष्व ॥१४॥

ममाह्वानं तु शाश्वतिकमेव। यथा साम्प्रतं तथा तदापि। यदा तदाह्वानं तव हृदयतन्त्रीमनाहतमच्छेद्यम् आकृष्टवती तदैव त्वमागतवती। सारवत्या त्वया यदेव विहितं तदेव नितरां सुष्ठु इति।

सारदा। इदानीं निश्चिन्ता धन्या चास्मि। [ स्वगतम् ]

अविज्ञायाशयं पत्युः स्वैरं किमपि कुर्वताम्।
आतदाशयविज्ञानं वेपते हृदयं नृणाम् ॥१५॥

रामकृष्णः। भृशं श्रमक्लान्ता पीडिता च त्वं साम्प्रतं निद्रासुखं लभस्व। अन्येद्युरावां संलपनं करिष्यावहे।

सारदा। यथा देव आदिशति। ( उभौ निष्क्रान्तौ। )

———

# प्रथमोऽङ्कः

## द्वितीयदृश्यम्

[ ततः प्रविशति सारदामणिः श्रीरामकृष्णश्च ]

रामकृष्णः। यथा जनन्यभिलषति तथा सर्वं संघटते। तस्या एवाशीर्वादक्रमेण साम्प्रतं स्वस्था वर्तसे। पश्य—

इच्छामयी मम यदिच्छति मुक्तकेशी
व्यक्तं तदेव घटते सततं जगत्याम्।
का वा कथा तनुभृतः कुधियस्तदीया-
मीशोऽपि न प्रभवति प्रतिहन्तुमिच्छाम् ॥१६॥

वर्णचतुष्टयात् प्राग् या याः शिक्षास्तुभ्यं मया प्रदत्तास्ताः सर्वास्त्वया ध्रुवं सम्यक् समधिगताः ?

सारदा। देव ! मया परममधुरं स्मर्यतेऽधुना ते कोमलरक्तं वचः। भूयोऽपि भगवद्दर्शनमेव जीवनाभिलषितमन्यथा जीवनं वृथेति।

रामकृष्णः। तत् त्वं सर्वथा ईश्वरम् आह्वयसि स्म ? नितरां प्रीतोऽस्मि ते। यतः—

पथ्यानामुपदेशानां लोके दातैव दुर्लभः।
श्रोता ततोऽपि विरलः पालको नावलोक्यते ॥१७॥

सारदा। त्वयव कथितम् आसीत्, करतालीभिः साध भगवन्नाम समुच्चार्यमिति। यथा करतालिकाभिवृ त्ताद् विहग उड्डयनपरो भवति, तथा करतालिकाशब्दात् पापविहगोऽपि देहवृक्षादपसरति। तथा चेत् सति परिवेशे गुन् गुन् गानमपि गेयम्।

रामकृष्णः। नितरां हृष्टोऽस्मि। यथा यथा मया भाषितं, तत् सर्वं त्वयाऽनुस्वारविसर्गपर्यन्तं तथा तथैव स्मर्यते। तथा सति सर्वं त्वयाऽनुष्ठितमपि।

सारदा। यथाशक्ति कृतम्। दीना हीना क्षुद्राऽहं सारदा, भगवानपि विभुरनन्तवैभवः। तथापि—

अगाधबोधः स हि देवदेवो
भक्तानुरक्तः करुणानिधानम्।

त्वच्छिष्यया सारदया विधाना-
दाराधितः शं कुरुतादशेषम् ॥१८॥

रामकृष्णः। यदि त्वम् असन्तोषपरवशा न स्या ममैकः प्रश्नः करणीय आस्ते। ( क्षणं विचिन्त्य ) अपि त्वं मां संसारपथं नेतुमत्रागतवती?

सारदा। ( त्वरितम् ) देव! कथमहं त्वां संसारपथं नेष्यामि। तव सहधर्मिण्यहं तव धर्मपथे साहायकमेव केवलं करिष्यामि।

रामकृष्णः। बाढम्। प्रीतोऽस्मि।

सारदा। देवदेव! त्वं किमपि मनसि न करोषि चेत्, ममापि हृदये प्रश्न एको जागर्ति -- मया सहजसारल्येन त्वत्पादपद्मे निवेद्यते।

रामकृष्णः। अनायासेन पृच्छ।

सारदा। तत् सकरुणं ब्रूहि—काऽहं तवेति।

रामकृष्णः। कथम्?

येयं सृष्टि-लय-स्थितिप्रणयिनी काली करालानना
या चेदं कृपया शरीरमसृजत् सर्वार्थसंसाधनम्।
सा मे मन्दिरवासिनी 'नहबत'स्था चापि मे यादृशी
त्वं तादृश्यसि लेशतोऽपि न ततो भिन्नेति मन्ये ध्रुवम् ॥१६॥

सारदा। [ स्वगतम् ] अहो! सर्वभूतेष्वीश्वरदृष्टिः पत्युम। [ रामकृष्णमुद्दिश्य ] देव! तवाभीष्टसाधनविषये यद् यदेव करणीयमास्ते, तस्मिन्नुक्ते सर्वं कर्तुमहं यतिष्ये।

रामकृष्णः। परमकल्याणि! को वा भेदस्तव प्रयत्ने मम वा। आवयोः प्रचेष्टनव्यापारः समानो लक्ष्यञ्च समम् एव।

अत एवोच्यते पत्नी मुनिभिः सहधर्मिणी।
पति-पत्न्योः समं लक्ष्यं पन्थाश्चापि समो भवेत् ॥२०

सारदामणिः। तद्विषये कः सन्देहः स्यात्।

रामकृष्णः। "मन एव सोपानम्, मन एव झटिकावर्तः, मन एव गुरुः, मन एव विघ्नः। सर्वं मनस्येव। तस्मात् सर्वाग्रे मन एव स्थिरीकरणीयम्। शुद्धं शान्तं मनो विना न किमपि संसिध्यति, न किमपि कर्तुं वा पार्यते। जपसमये मनो वानरवल्लम्फ-झम्पं वाञ्छति चेत्—सर्वं क्षणादेव नाशोन्मुखं प्रजायेत। मनःस्थैर्ये च गुरु-वैष्णवादिकृपैव हेतुः। अत एव गायन्ति 'बाउल' सम्प्रदायानुसारिणः—

कृष्णस्य वैष्णवानाञ्च गुरोश्चाप्नुवतः कृपाम्।
जीवस्य जायते सिद्धिर्न त्वेकमपि मुञ्चतः ॥२१॥

सारदामणिः। (विषण्णा) तस्मात् क उपायः? मनो धावति चेज्जपसमये कथं तत् प्रशमनीयम?

रामकृष्णः। उपायोऽभ्यासो वैराग्यं निष्ठा च। जपात् सिद्धिः, अभ्यासात् मनस्तन्मयं प्रजायते। नित्यं सन्धिक्षण एव जपः करणीयः।

सारदा। किं जपनीयम्?

रामकृष्णः। कलौ नामैव जपनीयम्। यन् नाम तुभ्यं रोचते तदेव। अभेदो नामनाम्निनोः। मातृनामाहं जपामि। पितृनामापि केचनाद्रियन्ते। एतयोस्तु मातृनाम वरम्। मातुः सहजप्रसन्नत्वात सुलभत्वाच्च। पश्यतु भवती—

तातः शास्ति सदा सदा च कठिनो गम्भीरधीरच्छवि-
र्माता कोमल-कोमला करुणया पूर्णा सुधास्राविणी।
सन्तानेष्वनुरज्यतोरपि समं पित्रोरतः कारणा-
देकत्र स्तिमितोऽमितश्च परतः स्नेहः सुतानां भवेत् ॥२२॥

रुदति शिशौ माता धावति। आहूता न कदापि समौनं तिष्ठति। तस्मान् मातृनाम मह्यं रोचते।

सारदा। नाथ! जन्मजन्मान्तरतपश्चर्याफलेन त्वादृशः पतिर्मया लब्धः। [स्वगतम्] नाथो मे भगवान् विजयताम्।

रामकृष्णः। यस्या जनन्या भवतारिण्याः कृपाबलेन आवामद्य भूयोऽपि मिलितौ समव्रतचारिणौ जीवनैक्यमधिगतौ स्वः, तस्या महदुद्देश्यं संसिद्धं भवतु। प्रचरत्वावयोः सहधर्माचरणसाधना— यस्मात् जगत् सर्वं सुखं प्रचरिष्यति चिरम् अनाकुलम्। अस्मिन् परम-मङ्गलमये निशीथेऽनुपम-शुभक्षणे सुभगे! मया सह भगवतीस्तुति-मुच्चारय—

देवि प्रसीद सदया दवयाखिलार्तिं
पन्था नवः कुसुमकोमलतां दधातु।
सम्पूर्णतां समधिगच्छतु साधना नौ
भूयासुराशु भुवनानि सुखास्पदानि॥२३॥

(उभौ प्रस्थितौ।)

---

# द्वितीयोऽङ्कः

## प्रथमदृश्यम्

[ ज्येष्ठस्यामावस्या। फलहारिणी-कालीपूजा ]

( ततः प्रविशति सारदामणिः )

सारदामणिः। वर्षाद्धिकः कालो गतोऽत्र दक्षिणेश्वरमागताया मम। सर्वत्र राजते परमा शान्तिः। वक्षसि ममानन्दघटः केनापि संस्थापित इति मन्ये। स्मर्यते मया यत् प्रभूतादरेण विश्वपतिस्वरूपेण पत्या मे जिह्वाया अग्रे लिखितो मातृमन्त्रः। पुनस्तु तेनैवोपदिष्टास्मि यन् मया सर्वदा गृहे न स्थातव्यमिति। यतो वन्यविहगोऽपि निरन्तरं पञ्जरस्थिता जडतामापद्य दीनो मूको भवति। ततोऽवसरक्रमेण मम पल्लीभ्रमणं देवेनैवोपदिष्टम्।

किन्तु नाहं कुत्रापि गन्तुमिच्छामि। नहबतखानाभ्यन्तरे राजते विश्वजननीरूपिणी मे पत्युजननी चन्द्रकान्तमणेः कोटिगुणाभ्यधिक-रूपगुणशालिनी चन्द्रमणिः। यथा पत्युस्तथा श्वश्रूदेव्याश्च मे चरणसेवा सर्वसुखकरी। कस्याः खल्वीदृशी श्वश्रूमाता वर्तते? नाथोऽपि नित्यम् आहार-ग्रहणात् प्राक् यां जननीं प्रणम्याशीर्वादान् याचते, जगति तस्यास्तुलनं कुतः?

[ प्रविशति चन्द्रमणिः ]

चन्द्रमणिः। मातः सारदे! कथं विलम्बः संघटते गदाधरस्य स्वकक्षप्रत्यावर्तने? ज्यैष्ठमासस्यामावस्येयं फलहारिणी-कालिकापूजातिथिः। परमपुण्यदिवसोऽयम्।

मातस्त्वमिदानीम् ऊनविंशतिवर्षीया वर्तसे। वारं वारम् अद्य स्मरामि पञ्चवर्षवयस्कायाः क्षुद्रकायायास्तव मद्गृहे प्रथमागमनम्। ततश्चतुर्दशवर्षाभ्यन्तरे कीदृशं महत् परिवर्तनं ते संघटितम्!

आसीद् या वसनासहा तनुलता सा वाससा वेष्टिता
काले यौवनमञ्जुले परिणता निम्नोन्नतैरङ्गकैः ।
नेत्रे त्रस्तकुरङ्गनेत्रचपले शान्तस्थिरे साम्प्रतं
सर्वोपर्यपि शोभते विजयिनी कान्तिच्छटा कापि ते ॥२४॥

मनसि मे जायते यद् विश्वस्य पूजा-सम्भारस्त्वय्येव सत्यमुपपद्यते ।

सारदा । (मातरं चन्द्रमणिं प्रणम्य) महाजननि ! भूयो भूयस्त्वत्पदरजांसि मूर्धनि धारयामि । मातुराशीर्वादापेक्षि सर्वं सुखम् । मातुर्गरीयसी कापि जगति नास्ति । तव पुत्रस्येदममृतमयं भाषितम्—

मातुः सृष्टिः सर्वा मातुः पुत्रस्य च को वा भेदः ।
पुत्रेऽपि मातरीव विराजते सा महाजननी ॥२५॥

एतत् सर्वं त्वां दृष्ट्वा मयाऽनायासेन प्रतीयते, मातस्त्वमेव महाजननी ।

चन्द्रमणिः । [स्वगतम्] ईदृशी निष्ठा, ईदृशी भक्तिश्चाचिन्तितपूर्वं एव । सत्यं नु- हृदयेनैकदा कथितं गदाधरस्य मधुरं वचः—

सहस्व समयं कञ्चिन्निर्मास्ये जीवन्तीं जगदम्बाम् ।
हृदय ! जगन्मातेव निखिलजननी भविष्यति सारदा ॥२६॥

[सारदामणिमुद्दिश्य] वधूमातः ! सतीसावित्र्योरपि समधिकपुण्यात्मिकायास्ते चिरकल्याणमनिवार्यमेव । त्वं महाजननी भव ।

[रामकृष्णः प्रविशति]

रामकृष्णः । फलहारिण्याः कालिकायाः पुजादिवसेऽद्याहं सर्वार्थसाधिकां जननीं षोडशीं संपूजयिष्यामि । यामिन्या मध्यभागे लग्नः । पूजोपकरणानि सर्वाणि हृदय एव संग्रहीष्यति । [सारदामुद्दिश्य] उपकरणानां सर्वेषां सज्जीकरणं त्वय्येव समुपपद्यते । उपवासश्च ते करणीयः ।

[सर्वे बहिर्गच्छन्ति]

———

# द्वितीयोऽङ्कः

## द्वितीयदृश्यम्

[ ज्यैष्ठमासस्यामावस्याया निशीथः। सुसज्जितो रामकृष्णस्य स्वकक्षः। मातुः षोडशीदेव्या आसनं सुसज्जितम्। आम्रपल्लवादि-संयुतो घटः। नैवेद्यम्। पुष्पचन्दनधूपदीपादिपूजोपकरणानि। सारदैकाकिनी समाकुलाकाङ्क्षोत्कण्ठया प्रविशति ]

सारदा। पूजासमयः समागत एव। कथं नाथस्य विलम्बः? [ अदूरे रामकृष्णं दृष्ट्वा ] अहो! आनन्दो मे, देव आयाति महा-जनन्याः संपूजनार्थम्।

( प्रविशति रामकृष्णः )

रामकृष्णः। आयाहि, स्वहस्तेन सुसज्जितां करोमि त्वाम्।

सारदा। कैरुपकरणैः।

रामकृष्णः। यैर्मृन्मयी प्रतिमा सज्जिता क्रियते तैरेव अलक्तक-शाढिका-सिन्दूर-प्रभृतिभिः। पूर्वास्यस्य मे पुरत एव त्वं पश्चिमास्योप-विश। मातुरासन एवोपविश।

सारदा। कथमहम्?

रामकृष्णः। त्वमेवाद्य त्रिपुरासुन्दरी भूत्वा मे पूजां ग्रहीष्यसि। अस्मिन् कक्षे षोडशोपचारैर्जीवन्ती षोडशी त्वमेव सारदा शुभदा श्यामा सर्वमङ्गला मया पूजनीया।

सारदा। किमिति देवीं षोडशीं परिहाय मानुषीं मां समर्चयितु-मिच्छति देवः।

रामकृष्णः। सारदे, यन्मया पूर्वमुक्तं (—"येयं सृष्टिलयस्थिति-प्रणयिनी" इत्यादिश्लोकं पुनः पठति ) तस्य याथार्थ्ये मा नाम कस्यापि संशयो भूदिति स्वाचरणेन प्रमाणीकर्तुं ममायमुद्यमः।

सारदा। अथैवं देवहेलनेन कच्चिदावयोः प्रत्यवायो न भवेत् ?

रामकृष्णः। कथं देवहेलनं कथं वा प्रत्यवाय आशङ्कनीयः ? सैव देवो पूज्यते, भेदः परम् आधारे। आधारभेदश्च प्राचामपि सम्मत एव। किञ्च,

मृन्मय्यां प्रतिपूजिता भगवती मूर्तौ घटे वा पटे
सन्तुष्येद् यदि किं निजासु तनुजास्वेषा विरक्ता भवेत् ?
आधारं परिकल्प्य वीतकलुषां तत् त्वां नवीनाध्वना
पूज्याद्य त्रिपुरा मया शुभतिथौ कः प्रत्यवायोऽत्र नौ ॥२७॥

सारदा। किमत्र मया वक्तव्यम्, यथा भवते रोचते तथा करोतु देवः।

[ अथ षोडशोपचारै रामकृष्णो जननीं संपूज्य प्रार्थयते। ]

शक्तिस्वरूपे त्रिपुरेश्वरीडेऽथ
द्वारं समुद्घाटय देवि ! सिद्धेः।
अस्याः समुद्भूय तनौ पुनोहि
तनुं मनश्चातनु मङ्गलञ्च ॥२८॥

[ श्रीरामकृष्णः सारदामणिश्च समाधिस्थौ ]

रामकृष्णः। ( चिराद् उत्थाय )

"यद्दत्तं भक्तिभावेन पत्रं पुष्पं फलं जलम्।
आवेदितञ्च नैवेद्यं तद् गृहाणानुकम्पया ॥"

देवि गृहाण गृहाण—मां मम साधनाफलं जपमालाञ्च।

( मालां देव्यै निवेद्य )

"सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥"

( इति साष्टाङ्गं प्रणमति । )

———

# तृतीयोऽङ्कः

( विष्कम्भकः )

जयरामवाटिकायाः कश्चन धर्मप्राणो नाम कृषिजीवी कामारपुकुरस्य च कश्चन केवलकृष्णो नाम मत्स्यजीवी प्रविशतः।

धर्मप्राणः। अहो! आश्चर्यं नु घटनापरम्परा। अस्मिन् एव १२८० तमे वङ्गाब्दे अग्रहायणतश्चैत्रमासस्य मध्ये—पञ्चमासाभ्यन्तर एव मृत्योः शान्तिक्रोडम् आश्रितवन्तौ सारदामणेरार्यपुत्राग्रजो रामेश्वरः पिता च रामचन्द्रमुखोपाध्यायः।

केवलकृष्णः। आश्चर्यं खलु सम्मेलनम् एतयोः परिवारयोः।

धर्मप्राणः। तन्नु कथम्?

केवलकृष्णः। किं न पश्यति भवान् भक्तिमाहात्म्ये वर्णनातीतं सामञ्जस्यमेतयोः परिवारयोः? मृत्युसमये रामकृष्णाग्रजो रामेश्वरः प्राह—"पथिपार्श्वे दाहक्रिया मे करणीया, चिताभस्मानि च पथो धूलीभिः संमिश्रणीयानि यथा साधूनां गमनसमये तेषां पदरजोभिः मिलितदेह-भस्मनो मे सद्गतिर्भवेत्।"

धर्मप्राणः। परमशोभनं खल्वेतद्वचः।

केवलकृष्णः। भूयोऽपि शृणु। अस्माकं सारुः सारदामणिर्वा-माशयरोगेण सातिशयम् आक्रान्ता न केनाप्युपायेनारोग्यं भजते स्म। किन्तु रामकृष्णेन यस्मिन् दिवस एव उक्तम्—"भो हृदय! सा (सारदा) इत्थमेव जगत्यागमिष्यति पुनर्गमिष्यति च, तस्या मनुष्यजन्मनः किमपि सार्थक्यं न भविष्यति।" ततः प्रभृति सा सारदा-रोग्यं लभते स्म।

धर्मप्राणः। अहो चमकप्रदा घटनेयम्। भूयोप्येतयोः परिवारयोर्वार्तां ब्रूहि। एतद्वार्ताश्रवणार्थमहं नितरामुत्सुको वर्ते। पश्य—

संसारदावानल-तापितानाम्
अन्विष्यतां शान्तिसुशीतलाम्भः।
सत्सङ्गमः सच्चरितानुचर्चा
पीयूषकल्पा किल मानवानाम्॥२६॥

धर्मप्राणः। केचन पुनरेनमेव गदाधरमुखोपाध्यायं रामकमल-रामेश्वरानुजं सर्वदा जागतव्यापारेषु परोपेक्षाप्रदर्शनाद् भावोन्मत्तत्वाच्च उन्माद इति विघोषयन्ति। सारदाया माता श्यामासुन्दरी तु कन्याया निष्पुत्रकत्वात् करुणं विलपति। किन्तु श्रूयते रामकृष्णेनेत्थं भाषितम्—

कन्यायां गर्भजातांस्त्रिचतुरतनयान् द्रष्टुमुत्कण्ठमाना
किं श्वश्रूः साश्रुनेत्रा विलपति करुणं वत्सहीनेव धेनुः।
तादृक् कालो न दूरः स्वतनयरहिताप्यात्मजा यत्र तस्या
"मा मा" शब्दैः समुच्चै रुजमतिमहतीं कर्णयोर्लप्स्यते सा ॥३०

केवलकृष्णः। एतद्भाषणं सामयिकविजल्पितमिव श्रूयते। किन्तु दुःखस्य विषय एष एव यत् श्यामासुन्दरी सारदया सह दक्षिणेश्वरं गत्वा न दिनमेकमपि तत्र स्थातुं प्राभवत्। रामकृष्णस्य भागिनेयो हृदयोऽतीव कर्कशभाषी। स खलु "कथमागता ? कस्य हेतोः ? किमत्र संघटितम् ?" इत्यादिभिः सुमिष्टभाषितैः श्यामासुन्दरीं सन्तोष्य तां तस्याः कन्यां सारदां च व्यसर्जयत्। ते श्यामासुन्दरी सारदा च निरुपाये रामलालेन नौकां संग्राहयामासतुः। तस्मिन् दिने श्रीरामकृष्णो मौनमवाललम्बे। मन्ये एतद्दुष्कृतफलेनैव हृदयस्य सौभाग्यसूर्योऽपि तस्मिन् क्षण एवास्तमगमत्। अचिरादेव कारणान्तरमुद्भाव्य मन्दिराधिकर्ता हृदयं चिराय दक्षिणेश्वरान्निष्काशयामास। न चैतदाकस्मिकम्, नियमः खल्वेषः। कथमिति ?

जनयति यदि दुःखं पामरस्यापि कश्चिद्
ध्रुवमनुभवितव्यं तत्फलं तेन सद्यः।
प्रणिहितहृदयानामीश्वरे सर्वकालं
गुरुजनरमणीनां का कथा दुःखदातुः ॥३१

इदानीं पूजकस्य हृदयस्य स्थलाभिषिक्तोऽभवद् रामकृष्णभ्रातुष्पुत्रो रामलालः। अत एवेदानीं सारदामणिर्लक्ष्मीशिवरामाभ्यां सहिता दक्षिणेश्वरं गमिष्यतीति श्रूयते।

 

निर्विघ्नं गच्छतादेषा साध्वी पतिनिकेतनम् ।
चिरान्मिलितयोर्भूयाद् दम्पत्योः सुखमक्षयम् ॥३२

तदेहि, आवां गच्छावः ।

[ निष्क्रान्तौ धर्मप्राण-केवलकृष्णौ ]

( इति विष्कम्भकः )

---

## तृतीयोऽङ्कः

### प्रथमदृश्यम्

स्थानम्—'तेलोभेलो' प्रान्तरस्थ-वटवृक्षतले कालीमन्दिरम् ।

कालः—रात्रिः ।

[ प्रविशति श्रीरामकृष्णदत्त-कङ्कणादि-परिभूषिता सारदामणिः । ]

सारदा । अहो ! दूरं गता खलु मे सङ्गिनः । क गता लक्ष्मीः ? क वा शिवरामः ? घोरे काननेऽस्मिन्नेकाकिन्यहं विराजे । सर्वथा तथा भवतु यथा कस्याप्यमङ्गलं न स्यात् । देव ! सर्वेषां मङ्गलं कुरु ।

[ दूरादलातालोको दृश्यते ]

कस्माद् अकस्माद् विच्छुरत्यालोकरश्मिः । देवो मां प्राह—"आपत्पात इष्टनाम स्मरणीय"मिति । तत् तथा करोमि ।

( इति निमीलितनेत्रा तिष्ठति । चिराच्चक्षुरुन्मील्यायान्तं कञ्चन पुरुषं दृष्ट्वा । किञ्चिद्भयं नाटयन्ती स्वगतम् )

जानूर्ध्वगामि मलिनं वसनं वसानः
कृष्णाकृतिर्निविडकुञ्चितकेशपाशः ।
यष्टिं करे वलयिनि प्रतिगृह्य दीर्घां
कोऽयं समेति जनयन् हृदयस्य कम्पम् ॥३३॥

[ ततः प्रविशति घोरकृष्ण-निबिड-कुञ्चित-केशपाशो दीर्घयष्टिको रौप्यवलय-हस्तो दस्युः कालुबागदो । ]

दस्युः। कालि! करुणामयि! गृहाण दुष्कृतिनस्तनयस्य मे प्रणामान्। यद्यपि—

न जानामि बालान्न यूनो न वृद्धान्
धनानां निमित्तं निहन्मीह सर्वान्।
भृशार्तश्च कार्तस्वरक्षोदलोभा-
न्निहन्तुं भवेन्मे न कारुण्यलेशः॥३४॥

तथापि—

क्रूरापि वन्योचितवृत्तिरेषा
जीवातवे यन्मयका गृहीता।
दयामयी त्वं जगतः प्रसूति-
र्निस्तारिका किं न भवेस्ततो मे?॥३५॥

( सारदां दृष्ट्वा सोल्लासं हन्त )

दैवादत्र समायाता कामिनीयं सकाञ्चना। ( सविषादम् )
कष्टं निष्किञ्चनप्राया प्रतियास्यति बान्धवान्॥३६॥

का त्वम्? कथमस्मिन् "शुभे" स्थाने दण्डायमानाऽसि? कुत्र वा यास्यसि? अपि न जानास्यस्मात् स्थानात् स्वर्गलाभः सुलभ एव।

सारदा। पूर्वस्यां दिशि गन्तुमिच्छामि।

दस्युः। नायं पन्थास्तेऽयनाय। अहं त्वां शोभने पथि नेष्यामि। मामनुसर। हाः हाः हाः! ( उच्चैर्हसति )।

सारदा। ( सारल्यमभिनीय ) यदाज्ञापयति भवान्। कृतज्ञास्मि।

दस्युः। हाः हाः हाः! अतिसाहसिनी त्वम्। सत्यं वद का त्वमसि?

सारदा। पितः! अहं तव कन्या सारदा।

दस्युः। मम कन्या सारदा? सत्यं वद का त्वम्? रे मृषाभाषिणि न जानासि कस्य करे पतिताऽसि?

वाञ्छसि यदि कपटेन स्वीयां मुक्तिं दस्योर्मे हस्तात्।
तदयं महाभ्रमस्ते नाहं शक्यः प्रवञ्चयितुम्॥३७

सारदा। पितः! सत्यं वदामि, अहं तव कन्या सारदा।

दस्युः। [सचकितम्] मम कन्या सारदा? आश्चर्यमाश्चर्यम्! अकस्मान् मनसि मे कथं सन्तानस्नेह उद्वेलो भवति?

सुप्तं यच्छैलसारे मम हृदि सुचिराद् गूढवात्सल्यबीजं
सन्तानस्नेहयोगात् किमिति तदधुना कल्पते ह्यङ्कुराय।
नो चेदन्यस्य गृह्णन्नदयमनुदिनं प्राणवित्तादि सर्वं
किं वैक्लव्यं भजामि ह्यपरिचितचरीं वीक्ष्य बालां वनान्ते ॥३८॥

नहि नहि, नैतादृशं चित्तदौर्बल्यं मयि शोभते। सत्यं वद, का त्वम्? कथम् एतादृशम् अघटन-घटनम्! अथवा, नहि कन्यका, सा त्वं मम स्नेहमयी ममता-मधुरा जनन्येव।

सारदा। परमश्रद्धेय पितृदेव! कृपया शृणु तव कन्याया दुरवस्था-विषयम्। सङ्गिनो मे विश्वस्ताः पुरतः कुत्रापि भवेयुः। अहमपि पथिभ्रष्टा वर्ते। भवतां कृपामधुरिम्णाऽहं तैः सह सम्मेलितुं वाञ्छामि। भवतः परमादरभाजनं जामाता, दक्षिणेश्वरधाम्नि राज्ञ्या रासमण्याः श्रीकालिका-मन्दिरे वसति। तत्पादोपान्तप्रापणाय ममेयं शुभयात्रा। आ-कालीमन्दिरं मामकः सहायको भवान् आगच्छति चेज् जामाता ते श्वशुरं महत् समादरिष्यते।

दस्युः। [स्वगतम्] आश्चर्यमाश्चर्यम्!

रोमाञ्चितं भवति मे सकलं शरीरं
नेत्रद्वयं विगलदश्रुतयाऽप्रसन्नम्।
कम्पः परोऽङ्घ्रि-युगले स्थित ईश्वरीयो
भावश्च कोऽपि हृदये, किमहं करोमि ॥३९॥

सारदा। पितः! कथं तूष्णीं तिष्ठसि? किं चिन्तयति भवान्?

दस्युः। अहो! मधुर-गम्भीर-वाणीयं मम हृदय-वीणा-तन्त्रीं झङ्कारयत्यपूर्वतानेन। [सन्निकटतरमागत्य सारदां निपुणं दृष्ट्वा] किमियं मानवी? अथवा छद्मवेशधारिणी देवी?

नेयं साधारणी वेशधारिणी तारिणी स्वयम् ।
विद्योतते शरीरेऽस्या यतो भागवती द्युतिः ॥४०॥

हीरकखचितकाञ्चन-वलयम् अस्या हस्ते ब्रह्माण्डमिव राजते । अथयेयं देवी सीता । रघुनाथ-हृदयानन्द-कारणं यथा पञ्चवट्याम् । तस्याः शोभनालङ्कार-विभूषिता विश्वविमोहिनी मूर्तिः प्रोद्भासयतीदं तमिस्राच्छन्नं घोरमरुस्थलम् । गलदेशेऽस्या महीयस्या "मटर"-मालिका, कर्णयोः कर्णपूरः ("माकडि"), नासिकायां "नत्" इति भूषणम् । अहो ! भक्तरूपिणा भगवतेव सुसज्जितेयं जगज्जननी ।

(सारदामुद्दिश्य सश्रद्धम्)

मातः ! क्षमस्व माम् । मा भैषीः । निर्भयं मामनुसर । पश्चान्मे समागच्छति मम पत्नी परमसाहसिनी कर्मनिपुणा 'वाग्दिनी' ।

सारदामणिः । (पुरतः पश्यन्ती स्वगतम्) अदूरे सत्यं नु दृश्यते छायालीनो नारीकायः ।

(दस्युमुद्दिश्य) स्नेहमय जनक ! भीतेः किं वा कारणम् ? अहं तवाश्रिता साम्प्रतम्, अत एव निर्भया विचरामि ।

[ततः प्रविशति दस्युजाया वाग्दिनी]

सारदा । (वाग्दीजायामुद्दिश्य, तस्या हस्तं धृत्वा) मातः ! अहं तव स्नेहधन्या कन्या सारदा । सहगामिभिः पश्चात् परित्यक्ता नितरां विपन्नाभवम् । सौभाग्यक्रमेण मातापितरौ मेऽचिरादेव घटनास्थले समागतौ । अन्यथा कीदृशो मे विपदभविष्यदिति को नु वक्तुमर्हति !

दस्युपत्नी । परमादरिणि दुहितः ! इदं मे परमं सौभाग्यं यद् एकेनैव मातृसम्बोधनेन त्वं मादृशीं दीनहीनां दस्युललनामपि पवित्रीकरोषि । पथिश्रमक्लेशो भृशं त्वां दुनोति । अहो ! पश्य । कमल-कोमलं पल्लव-पेलवं स्वभावालक्तक-राग-रञ्जितं तव पादयुगलं धूलि-धोरणि-परिचुम्बितं स्वेदाक्तं शिशिरसिक्तं सत् अलिकुल-निषेवितं विकच-पङ्कजद्वयमिव परिशोभते । किञ्च,

तेलोभेलो नामके प्रान्तरेऽस्मिन्
रुद्धश्वासे बद्धभीमान्धकारे।
त्वय्यायान्त्यां मन्दवायुः प्रवाति
ज्योत्स्ना सान्द्रा मन्दयत्यन्धकारम् ॥४१॥

सत्यं सारदे ! का त्वम् ?

सारदा। जननि ! अहं जयरामवाटिका-निवासिनः परमसत्यनिष्ठ-श्रीरामचन्द्रमुखोपाध्याय-महाभागस्य वल्लभा दुहिता सारदा, 'सारुः' इति आदरात् स्नेहसिक्तनामधेया। जननी मे श्यामासुन्दरी जगन्माता श्यामेवावतीर्णेति मन्ये। किन्तु मातः !

युवां मयि कृपापरौ त्वमथ भद्र एषोऽपि च
प्रसाद-ममतादरान् व्यततुतं हि नित्यं यतः।
ततोऽहमपि सारदा विपुल-सम्भ्रम-श्रद्धया
स्वकीय-पितराविवास्तमितभेदमीक्षे युवाम् ॥४२॥

युवयोः स्नेहमधुविप्लावनेन मधुरं मम जीवनम्। केवलं प्रार्थये यथा ते जामाता युवयोः सम्मानन सौभाग्य-सुखं लभते, तथा विधीयताम्।

दस्युः। जामातरं द्रष्टुम् अचिरादेवावां ध्रुवं गच्छावः। प्राण-प्रिय-कन्यके ! गभीरा रात्रिः, त्वमपि परिश्रान्ता, अधुना अदूरस्थितम् आवासस्थानं शुभागमनेन धन्यं कुरु।

सारदा। कृतार्थास्मि। [ विश्रामागारं प्राप्य ] परम-रमणीयं स्नेहसुशीतलम् इदं स्थानम्।

दस्युः। स्नेह-पाञ्चालिके ! नयनमणि-सारदामणे ! तव पादारविन्द-स्पर्शेन स्वर्गसौधमिव राजत इदं क्षुद्रगृहम्।

गलति किमिति मातस्त्वद्वचोभिर्मसेदं
हृदयमचलसारं दस्युवृत्तिप्रसङ्गात्।
भुवि पुनरवतीर्णा राधिका जानकी वा
त्वमसि न तु तदन्या कापि सामान्यनारी ॥४३॥

सारदा। महीयन् पितः! कन्यैव जननी, विश्वकन्यैव विश्वजननी। तत्र को भेदः? तस्मादस्माकं वैदिककृत्येषु प्राथम्येन मातृकापूजा, अन्ते च कुमारीपूजनम्। तस्मात् यतो भवान् मां कन्यकां मन्यते, तत एव मां जननीरूपेणापि परिगणयति।

अत्याश्चर्यं भारतं वर्षमेतद्
यत्रोत्पन्ना मानवा देवभावाः।
नारीदर्शं मातृबुद्ध्या नमन्ति
मातर्मातर्व्याहरन्तीति चोच्चैः ॥४४॥

दस्युपत्नी। किन्तु नाथ! कथम् एतत्? यद् भवान् ममानाहार-क्लिष्टायाः कन्यकाया इत्थं भाषणक्लेशं जनयति? विश्रामं लभतां नाम प्राणप्रियतरा दुहिता सारुः।

[ दस्युपत्नी स्ववस्त्राञ्चलेन सारदायाः शय्यां रचयति। ]

दस्युपत्नी। नाथ! अचिराद् विपणेरानय भृष्टतण्डुलम् ("मुड़ि")। आदरिणी कन्यका मे प्रथमं येन तेन प्रकारेण क्षुन्निवृत्तिं करोतु नाम। आवयोरन्नाभावहेतोर्महत् कष्टं मे दुहितुः स्यात्। किन्तु किं करोमि। ( दस्युर्बहिर्गतः। )

सारदा। न हि न हि मातः! यदेव स्नेहस्पृष्टं तदेवामृतम्! पश्य मातः—

पीयूषभोजनपरा अमराः परिहाय त्रिदिवं शिवदम्।
निवसन्ति यज्ञवेद्यां श्रद्धाहुतहव्यमात्रपिपासया ॥४५॥

दस्युपत्नी। सारो! मातः! सुखं विश्रामं कुरु। नात्र आस्ते किञ्चिदपि भीतेर्दुःखस्य च कारणम्। जामातरं द्रष्टुं गच्छसि, सर्वं सुखं हृदयं ते विप्लावयतु नाम।

( दस्युर्भृष्टतण्डुलेन सह प्रत्यावृत्तः। )

दस्युः। मातः सारदे! भृष्टतण्डुलं कृपया गृहाण।

सारदा। परमतृप्तास्मि। पितः किमिति भवान् क्रूरवृत्त्या जीवति?

दस्युः। मातः ! अलमद्य तस्याः पापकथायाः समालोचनेन। अद्य मम नारकजीवनमपि परमदेव्यै चिराय समर्पयामि। त्वयाद्य दत्तं मह्यं दिव्यं चक्षुः। भक्तानुग्रह-विग्रहो भगवान् रत्नाकर-दस्युं वाल्मीकिरूपेण परिणमयन् समुद्दधार। भगवतो बुद्धस्य करुणया दस्युप्रवरोऽङ्गुलिमालोऽपि जातो निर्वाणभाजनम्। भगवतो महाप्रभोर्नित्यानन्दस्य च करुणया जगाइ माधाइ समाख्यौ कलुषाचारौ कुसुम-पवित्रौ बभूवतुः। तद्वत्, स एव भगवान् अद्य मां समुद्धर्तुं मातुराकारेण समागतो नु किम्? पूर्वोक्तेभ्योऽप्यहं पाषण्डतम इति हेतोः पुरुषरूपं विहाय कोमल-मधुरनारीरूपं भगवता धृतं किम्?

सारदा। पुण्यश्लोक पितः! स्नेहान्धतया भवान् इत्थं कथयति। अहं सहजावला सारदा। भगवत इष्टदेवस्य करुणयैव भवान् मुक्तिं लप्स्यते।

दस्युः। मातः, शृणु मे शपथवाणीम्। कन्याप्रतिमां त्वां स्पृष्ट्वैव ब्रवीमि।

आस्तां नारकजीवनं मम चिरान्न्यस्तं जनन्याः पदे
काली सेयमतः परं हृदि परं मे राजतां पूजिता।
पूज्या चेत् प्रतिमा तपोधनविधिस्तत्रावलम्ब्यो मया
कामक्रोधमुखा भवन्तु बलयो न च्छागमेषादयः॥४६॥

दस्युपत्नी। ( अश्रु विसर्ज्य ) श्वः प्रभाते तमसा-परिवृतं स्थानमिदम् अधिकतरं तमसाच्छन्नं कृत्वा त्वम् पतिगृहं यास्यसि। भोजनाय तुभ्यं किं दास्यामि? जामात्रे वा किम् उपढौकनं प्रेषयिष्यामि? भवतु, एताः क्षुद्रक्षेत्रोत्पन्नाः कलायप्रसवमञ्जरीः ( "कडाइशुटि" ) तवाञ्चले निधास्ये—यथासुखं भृष्टतण्डुलेन भुङ्क्ष्व। इदानीं शयनसुखं लभस्व। यामिनी प्राग्रेसरा भवति। सारो! रक्षिरूपेण स्थास्यति ते पिता स्वयमेव।

दस्युः। अयि मुग्धे, अस्थाने तवोद्वेगः। अथवा युक्तमेवैतत्।

सर्वजगत्पालिन्या यद्यपि नास्ति भयं सारदामणेः।
तथापि लोकप्रथया सुतकृत्यमनेन पालितं भवति॥४७॥
सारदे वरदाकारे जगदम्बे परात्परे।
कालुवाग्दीजनन्यै ते सनातनि नमो नमः॥४८॥

---

## चतुर्थोऽङ्कः

स्थानम्—'नहबत्-खाना"। कालः—प्रभातम्।

[ प्रविशति अवगुण्ठनावृता सारदा हृदयश्च ]

हृदयः। ( सक्रोधम् ) मातुलानि! त्वदर्थे संगृहीतानां काष्ठ-खण्डानामेकं व्यतीतायां रात्रौ गङ्गया कुत्रापि अपसारितम्। तव पितृभूमि-"जयरामवाटिका", किन्तु तत्र विषये "जयस्य" किमपि न प्रेक्षे, "राम"-नामकस्ते पितापीदानीं नास्ति "वाटिका" तु नास्त्येव। पक्षान्तरे मम मातुलः, भवतु नाम "कामारपुकुर"-निवासी, किन्तु सर्वत्र तस्य नाम्नि महासमुद्रः स्वयमेव सर्वं संगृह्णाति।

लोके मान्यो महीयानतुलगुणयुतो मातुलो मे प्रसिद्धः
संसाराब्धेर्दुरन्तात् कति कति न जनानुद्दधार स्वशक्त्या।
विश्वानन्दप्रदाता प्रणमति जनता यं समालोक्य दूरात्
तस्यालक्ष्मीस्वरूपा किमिति गुणमरुस्त्वं स्थिताऽर्धाङ्गिनीत्वे? ॥४९॥

या जाह्नवी सर्वजने दयालु-
र्यच्चिन्तया हन्त जनास्तरन्ति।
सा केवलं भाग्यगुणात्तवैव
प्रतारयन्ती किल वर्तते नः ॥५०॥

सारदा। वत्स! कथं क्रोधपरवशोऽसि? अहं सुष्ठु जानामि मम दैन्यस्वरूपं दौर्भाग्यञ्च। इतश्च स्वयम् अहमपि सहस्रकोटिशः स्वीकरोमि — भगवान् श्रीश्रीठाकुरः सर्वथा एक एवाद्वितीयः। मत्सदृश्या दीनहीनया स्त्रिया सह कथं तस्य तुलनम्?

जानाम्यहं हृदय काममधन्यतां मे
दुर्भाग्यमप्यतिमहद् गुणराशिनाशि।
श्रीठाकुरः पुनरयं महतो महीयान्
तौल्यं कुतो जलधिपल्वलयोस्तनोषि ॥५१॥

हृदयः। (उच्चैः) किमहं तव परिहासभाजनं यद् इत्थं मामुपहससि ? नाहं केवलं जानामि, परन्तु निखिलमपि विश्वं जानाति,—

अङ्कः शशाङ्क इव कीट इव प्रसूने
और्वः समुद्र इव कण्टकवत् पयोजे।
विश्वश्रुते मम तु मातुलरामकृष्ण-
देवे त्वमस्यकुशला परमोऽभिशापः ॥५२

सारदा। वत्स! शान्तो भव। नोपहासोऽयम्, इयं मम हृदयोत्था सत्यतमा वाणी।

चन्द्रमणिः। (झटिति प्रविश्य)

हृदय! किमुन्मत्तोऽसि, यत् परमपूजनीयां मातुलानीं प्रतीदृशं कटु भाषसे ? किं ? किं ब्रवोषि त्वम् ? वधूमाता मे "जयरामवाटिकायाः" शाश्वतो जयः, कामारपुकुरस्य च; न केवलम् अस्मद्देशस्य; परन्तु निखिलधर्मराज्यस्य।

पुण्यतोया जाह्नव्यपि सारदाया हस्तं गृहीत्वा नृत्यन्ती जगन्मङ्गलाय समुद्रसङ्गमाभिमुखं प्रवहति। अपिच रे दुर्बुद्धे!

यदि भवति सुतो मे रामकृष्णात्ममूर्ति-
स्तदियमपि हि सीता राधिकायुग्मरूपा।
भवति च भव-सिन्धौ मातुलस्ते तरिश्चेद्
विगणय तनयां मे सारदां कर्णधाराम् ॥५३

हृदयः।

त्वमेव मातामहि मातुलान्याः
स्पर्धाभिमानौ विदधासि तुङ्गौ।
जानीहि वृद्धे नहि रामकृष्ण-
मप्येष शर्मा हृदयः स्तवीति ॥५४

कथं त्वम् अकारणमस्या हेतोर्मां तिरस्करोषि ?

चन्द्रमणिः। वृद्धाहं तत एव त्वत्तो जगत् पूर्णतरं जानामि। इयं

मे कन्यका निरलसा निस्तन्द्रा दिवसयामिन्यौ सायं प्रातरात्मानं धूपयष्टिकामिव ज्वालयित्वा अस्माकं सर्वेषां जीवनं सौरभमयं करोति, तवापि। मा विस्मर, तवापि।

हृदयः। (उच्चैः) हुम्। एष शर्मो न कथमपि कमपि वा समपेक्षते। प्रथमतः, "जयरामवाटिका" विशुष्का, तव प्राणसमेयं सारदामणिस्तस्याः शुष्कातिशुष्कं पुष्पमपि न, केवलं भूतल-पतितं छिन्न-पत्रखण्डमेकम्।

[ कोलाहलं श्रुत्वा व्याकुलः प्रविशति रामकृष्णः ]

रामकृष्णः। हृदय! किं नु संघटितम्? कथं प्रभातेऽपि कोलाहलतत्परोऽसि त्वम्?

हृदयः। मातुल! गङ्गानदी मातुलान्या गृहनिर्माणार्थमानीतं काष्ठखण्डमेकम् स्रोतसा वाहितवती, तत्र दोषः सवस्तस्याः—इति मयि भाषमाणे वृद्धेयं तडिद्वेगेनागत्य मातुलानीम् अकारणं प्रशंसति, मां च निन्दति। मम मते तु, सा न प्रशंसार्हा।

चन्द्रमणिः। सा न प्रशंसार्हा? का तदा जगति प्रशंसामर्हति? इयं मे दुहिता यामिन्यास्त्रिघटिकात आरभ्य द्वादश-घटिकापर्यन्तम् अतन्द्रिता शरीरक्लेशमविगणय्य सर्वं सुखमिति मन्यमानात्मानं क्षीणीकरोति, निःशेषं निःशब्दं निर्विकारम्।

रामकृष्णः। सत्यम्। विश्वसेवार्थं दत्तप्राणा सा मूर्तिमती करुणा क्षमा सहिष्णुता च।

चन्द्रमणिः। पश्य। क्षुद्रोयं 'नहबत'प्रकोष्ठः पारावत-निवासयोग्यतां गतः। तत्रापि बहुजनसंसेवनाय वस्तु-सामग्र्या आनन्त्यम्। यस्मिंस्त-स्मिन् क्षणे यस्मिन् कस्मिन्नप्यागच्छति नवनव-व्यञ्जनादिपाकोऽनया कर्तव्यः। मनसाऽपि नेयं विरागमाविष्करोति। अस्येदं प्रियम् इदमस्मै न रोचते एतदस्य पथ्यम् इत्यादिविवेचनया राशीकृतानि भोजनोपकरणानि प्रत्यहमेकाकिन्यानयैव क्षुधार्तजनेभ्य उदरपूर्तये भोज्यरूपेण प्रदेयानि। रजन्यामपि स्थानदोषादुपजातैस्तैस्तैः कारणै-

रस्या निद्रालेशोऽपि न भवति। बालिकेयं केनोपायेन शरीरं बहमानास्ते नाहं जाने। तथापि त्वं ब्रवीषि दोषोऽस्या एव।

हृदयः। मातुलानी स्वयम् एव स्वकष्टं जनयति -- यतोऽस्याः स्वभाग्येन सह विवादो वर्तते।

रामकृष्णः। (सरोषम्) हृदय! शृणु सावधानम्।

मां तुच्छीकृत्य यत्किञ्चिद् भाषसे तत् सहे वरम्।
एनामुद्दिश्य परुषं सहिष्ये भाषितं न ते ॥५५॥

अपि च शृणु रे मूढ!

य इह वसति देवः शाश्वतो मे हृदन्तः
स यदि भवति रुष्टः स्यादपि प्राणरक्षा।
अधिहृदयममुष्या राजमाने तु रुष्टे
न हरिहरविरिञ्चास्ते करिष्यन्ति रक्षाम् ॥५६॥

तस्मात् सावधानो भव, परं सावधानो भव।

[ हृदयः सभयं क्षणं मौनमवलम्बते। ]

चन्द्रमणिः। पुत्र! अहर्निशं कठोरश्रमकातरा ममेयं परमादरिणी पुत्री कथं शरीरधारणे समर्था भविष्यति? अहो! स्वल्पपरिसरेऽस्मिन् कक्षे पादसंप्रसारणस्यापि स्थलविहीन इयं युगपद् गार्हस्थ्यधर्मं सन्न्यासधर्मञ्च कथं पालयतु। इयं मे तनया स्वर्गलक्ष्मीः, अथ पुनर्मे गृहलक्ष्मीः। वत्स! अस्या हेतोः किमपि कुरु।

रामकृष्णः। (सस्मितं स्वगतम्) कः कस्य हेतोः किं करिष्यति? कः कं रक्षति? (मातरमुद्दिश्य) स्नेहमयि जननि! निश्चितमेवास्मिन् विषये किमपि करणीयम्। साधन-पथो हि कण्टकाकीर्ण एव।

हृदयः। [ स्वगतम् ]

विलोक्य चन्द्राननमेतदीयं कामं युवा मुह्यतु मातुलो मे।
मातामहीयं जरती किमस्यां स्नेहानुबन्धं प्रगुणीकरोति ॥५७॥

तत् सर्वमेतेषाम् आत्ममुखम्। (प्रस्थितः।)

सारदा। मातः सत्यं वदामि, का कथा दुःखस्य, परम् अनेन गृहकर्मणा निरन्तरं व्यापृताहं सुखमेवातुलमनुभवामि। यतः—

दददत्या दीनेभ्यः परिक्लिशतनुभ्योऽन्ननिचयं
जनन्यास्तन्वत्यास्तव च परिचर्यामनुदिनम्।
चरन्त्याः साहाय्यं पतिचरितधर्मे च विमले
श्रमो यो यो मातः स स खलु तपस्या मम परा॥५८॥

रामकृष्णः। सत्यमाह सारदा। किञ्च, स्थितायां मे मातरि अरण्यमपि नन्दनकाननायिष्यते। न तत्र किमपि कष्टं दुःखं वा। सर्वं सुखं सुखपरं च।

जननि! पुत्रवधूस्तव श्वश्रूदेवीं शुश्रूषमाणा जगदिदं स्वर्गादपि गरीयो मन्यते। यत् सत्यं मातुः का वा गरीयसी? मातृचरणमेव सर्व-तीर्थस्थानेभ्यो गरिष्ठम्, मातृचरणमेव श्रेष्ठः साधनविषयः। जननि, तव सेवैव जगज्जनन्या आराधना, त्वमेवावयोः परमा गतिः। [ मातरं साष्टाङ्गं प्रणम्य ) तवैवाशीर्वादान् आवां प्रार्थयावहे। [सारदा-देवी च साष्टाङ्गं मातृचरणयोः पतति ]

[ सर्वे निष्क्रान्ताः ]

— ——

## पञ्चमोऽङ्कः । ( विष्कम्भकः )

पुत्तिकानृत्यकृच्-छद्मवेशधारि ह्यारि-मेरीकृत-सङ्गीतम् ।

स्थानम्—विपणिकेन्द्रम् समयः—अपराह्णः

ह्यारिः । पश्य प्रिये मेरी नवयुगघटनम् ।

अहो रम्या नवीनरीतिः मधुर-हास-कास-पद्धतिः

प्रायः पतद्धूम्रवर्ति-कृष्ण-वदनम् ॥५६॥

वल्लकाषदत्तहस्त-सदाग्रीवाबन्धतुष्ट-

कृष्णवक्र-पादलोपि-चुङ्गिधारणम् ।

वाक्यमध्ये शतं प्रति ह्याट्म्याट् नवनवति-

शब्दव्यवहरणं मनोहरणम् ।

'बल'नृत्यं कुरु मेरि विश्वभूषणम् ॥६०॥

मेरी । दारलीन ( Darling ) पथिमध्ये घटतां बाहुग्रहणम् ।

गृहमध्ये भवतु नाम कटुवाक्यसंगरणम् ॥

यौथपरिवारस्य ध्रुवं धरालुण्ठनम् ।

नवयुग-सभ्यता हार्दिक-वाञ्छनम् ॥६१॥

ह्यारिः ।

दारलीन ! पथि पथि पथि नारी-विघूर्णनम् ।

ऊनविंश-शताब्द्याः सविशेषघटनम् ॥६२॥

[ ततः प्रविशतः प्रधान-करणिकः ( "बड़बाबु" ) आमओयेलः ( अमूल्यः ) तस्य चाटुकारः दोयारकिनसनश्च ( द्वारिकानाथसेनः )

आमओयेलः । ( सक्रोधम् ) अहो को न्वस्मादगाङ्गल-शिक्षितोपहासमूलकं सङ्गीतं गायति ? भो पुत्तलनर्तनकृन् महामूर्ख अशेषस्पर्धाशील ! केन रचितं सङ्गीतमिदं कुतो वा त्वया प्राप्तम् ?

दोयारकिनसनः । सत्यं महासत्यम् ! सारात्सार !

( पाश्चात्यिका-नर्तनकृतावुद्दिश्य )

त्वरितं ब्रूहि को दण्डविधिविगर्हितम् इदं सङ्गीतं रचितवान्। न जानासि कौ युवयोः पुरोभागे वर्तेते ? एष एव महामहिमान्वितः शतशतजनानां दण्डमुण्डनकर्ता "टमसन् एण्ड सन्स" नाम्नया महत्या आंलो-कोम्पान्याः प्रधानकरणिकः श्रीलश्रीयुक्तः अमूल्य-विश्वासः, मिष्टार 'आमश्रोयेलफेत्फुल' इत्यपरनामा। अहमस्मि तस्य प्रियभक्तः श्रीलश्रीयुक्त द्वारकानाथसेनः—यस्य मिष्टार 'डोयारकिन-सन' इति नामान्तरम्। तत् त्वरितं ब्रूहि, क्षणमात्रं विलम्बनं मा कुरु, सत्यं वद।

ह्यारिः। सारात्सार! ( Sir of Sirs! ) कथं भवान् रुष्ट इव अवलोक्यते ? भवान् राजयोगराजभोगपुष्टः, अहं भवतो दासानुदासो दीनदरिद्रः पल्लीकविः स्वावस्था-वैगुण्याद् राजधानीमार्गेषु छद्मवेशमास्थाय पाञ्चालिकानर्तनेन जीविकानिर्वाहं करोमि। सङ्गीतमिदं मयैव रचितम्।

आमश्रोयेलः। ( सक्रोधम् उच्चैः ) अरे अकालकूष्माण्ड! अपि त्वया "सपस्य पञ्च पदानि दृष्टानि" ? अहिरसि चेत्त्वेमहमपि नकुलोऽस्मि। पैतृकप्राणान् रक्षितुमिच्छसि चेदस्मात् स्थानादचिरेणैवापसर।

दोयारकिन्सनः—सत्यं महासत्यम्! याहि अधःपातं याहि, दूरं गच्छ।

( पाञ्चालिकानर्तनकृतौ बहिर्गच्छतः )

आमश्रोयेलः। ( सक्षोभम् ) अहो धृष्टता! अहो कृतघ्नता! अशिक्षितानां कुसंस्काराच्छन्नानां "नेटिभानाम्!" देवाशीर्वादसम्पातः खल्वेष यदाङ्गलजातेर्भारतवर्षस्य राजत्वभारग्रहणम्। अद्याप्यासमुद्र-हिमाचलं भारतीयाः सर्वे भूमौ पात्रं निधाय हस्तेन खादन्ति, शालिग्राम-प्रस्तरं पूजयन्ति, 'कोटं' 'प्याण्टश्च' न परिदधते, पुरनार्या सह चक्राकारं न नृत्यन्ति, 'बल्-डान्सं' न कुर्वन्ति। धिक्! धिक्! नह्यस्य देशस्य समुन्नतेः काऽप्याशा।

दोयारकिन्सनः। सत्यं महासत्यम्! सारात्सार ( Sir of Sirs )!

· अद्यापि भारतीया नार्यस्ताम्रकूट-लट्टिपानजनितम्, अर्थात् 'सिगारेट-पान-जनितं धूम्रजालं नासारन्ध्रमार्गेण नेतस्ततो विस्तारयन्ति। मद्यपानम्, अर्थात् "ककूटेल" पानं न कुर्वन्ति। परम्, अद्यापि यथापूर्वं बहुसहस्रवर्षेभ्यः प्राग् रचितं जीर्णदीर्णास्थिचूर्ण-जर्जरं रामायणं महाभारतञ्च सादरं पठन्ति। धिक्! धिक्! नह्यस्य देशस्य मुक्तेः काप्याशा ( प्रभुमनुकृत्य )।

आमओयेलः। न हि, न हि वर्षसहस्रेणापि "नेटिभानां" समुन्नतिर्भविष्यति। मध्याह्नमार्तण्डविकीर्णं दिवालोकमपि ते न पश्यन्ति। गाढतमसाच्छन्ना दिग्भ्रान्ता विचारबुद्धिविहीना भारतीयाः। नैतेषां हितं जगतीमण्डले कोऽपि कर्तुं शक्यति।

दोयारकिन्सनः! सत्यं महासत्यम् सारात्सार! भूयो "गण्डस्योपरि पिण्डकः" संवृत्तः। यद्यपि पाश्चात्त्यशिक्षा-धन्याः केचन नव-नवालोक-संप्रसारणैर्भारतवर्षम् आलोकस्नातं कर्तुं वाञ्छन्ति। ते हि वैदेशिकशिक्षाभ्यासात्—

कुखाद्ये खाद्ये वा कमपि न विभेदं विदधते
न कुर्वन्ति श्रद्धामपुरुषकृतौ श्रौतवचसि।
स्वसा वा भ्राता वा स्वजनक-जनन्यावपि च वा
लभन्ते नैतेभ्यो मरणसमयेऽप्यन्नकणिकाम् ॥६३

तथापि तेषां संख्या तु नगण्यैव। दैवदुर्विपाकादकस्मात् दक्षिणेश्वर-कालीमन्दिरे आविर्भूतो महाधुरन्धरः सनातन-ध्वजाधारी तथाकथितो युगावतारो रामकृष्ण-नामधेयः कश्चित्। स कृष्णं खिष्टञ्चैकीकरोति, सर्वधर्मसमन्वयवादं प्रचारयति च। बाइबेल-वेद-कोराणानां सुसमञ्जसत्वं कथं सम्भवति? श्रूयते च—एष साधुः कामिनीकाञ्चनत्यागी, मनःमोहकरेन्द्रजालविद्याकुशलः। अहो! भारतवर्षस्येदृशः सन्न्यासि-सम्प्रदायः सर्वथा भयकारणम्।

आमओयेलः। मूढोऽयं रामकृष्णो यो बुद्धिमतः पाश्चात्त्य-शिक्षितानपि विपथगामिनः कर्तुं चेष्टते। अपि न जानासि,—अयं

कपटतपस्वी स्त्रिया सह सन्न्यासधर्ममाचरति, मातरमपि प्रत्यहं प्रणम्यान्नं भुङ्क्ते, स्त्रियं भैरवीयोगिनीं गुरुरूपेण स्वीकरोति। ततः, स नामतः कामिनी-काञ्चनत्यागी, न कार्यतः। नैतादृशं काण्डम् इंलण्डे कदापि दृश्यते। "नारी नरकस्य द्वारम्" इति शास्त्रीय-वचनम्। सुतराम् एष रामकृष्णसाधुः शास्त्रगर्हितमाचरति। धिक्! धिक्! तन्मम हस्तेऽस्य ध्वंसोऽनिवार्य एव।

दोयारकिन्सनः। सत्यं महासत्यम्। तद्विषये कः सन्देहः? किन्त्वस्मिन् विषये प्राथम्येन यथायथ-वार्ता-संग्रहः करणीयः। सारात्सार! अदूरे तस्यैव पुत्रिकानर्तनकारस्य यन्त्रवाद्यं श्रूयते। स चतुर इव लक्ष्यते। अपि स गुप्तचरकार्ये नियोक्तव्यः?

आमओयेलः। शोभन एष प्रस्तावः। तमाहूय प्राथम्येन परीक्षणं कुरु। ततः कर्मणि नियोक्ष्ये।

दोयारकिन्सनः। सत्यं महासत्यम्। [ दूरात् पुत्रिका-नर्तन-कारकमुद्दिश्य ]—

अयि बटो! अत्रागच्छ झटिति, सारात्सारस्त्वामाह्वयति।

( प्रविशतः 'ह्यारिः' 'मेरी' च )

ह्यारि-मेरी। 'साहेबौ!' नमो युवाभ्याम्। कथं कृपया स्मृतावावाम्?

दोयारकिन्सनः। ( ह्यारिमुद्दिश्य ) अस्माकं सारात्सारो मिष्टार आमओयेलः फेतूफुलः त्वयि भृशं तुष्टो जातः। कार्यविशेषव्यपदेशेन स तव चातुर्यं परीक्षितुम् इच्छति। प्राथम्येन सारात्सारस्य सन्तोषार्थं सङ्गीतमेकं रचय। उपढौकनं त्वं प्रचुरं प्राप्स्यसि।

ह्यारिः। यथाज्ञापयति भवान्। मद्रचितं गानमेषा गास्यति।

ह्यारिः। ( जनान्तिकम् ) सखे! साम्प्रतम् ईदृशं सङ्गीतं श्लेषात्मकं रचयामि—यस्यार्थद्वयं भविष्यति। येनैष मयूरपुच्छधारी काकः प्रतारितः

स्यात्। त्वमस्य श्लोकस्य प्राथमिकमर्थम् एतौ श्रावय, अन्यार्थं पुनरहं साङ्गमङ्गं तव सकाशे सुगुप्तं कथयिष्यामि।

मेरी। एवं भवतु. एषाहं गायामि, समुत्कण्ठते मे चेतो गूढार्थ-श्रवणाय। ( इति गायति। )

( सङ्गीतम् )

व्यङ्ग्यराज धराधार परभूषासुसज्जक।
पटुभाष महाप्राण परभृच्छाव-पालक ।।६४।।
विलायत-प्रमोदिन् भो विदग्धाननशोभक।
कलिप्रिय चिरंजीव स्वकार्योद्धारसाधक ।।६५।।

साहेबौ! अस्यार्थं शृणुतम्।

( मेरी श्लेषविद्धस्य श्लोकस्यास्य अर्थमेकं करोति, ह्यारिः पुन-रन्यं प्रकृतमर्थम्। )

मेरी। भवान् "व्यङ्ग्यराजः", 'गूढार्थाधिपतिर्बृहस्पतिः'।

ह्यारिः। अर्थात् त्वम् 'इङ्ग-वङ्ग-कुलाधमः'।

मेरी। भवान् "धराधारः"—धराया आधार-स्वरूपः।

ह्यारिः। अर्थात् त्वं "धरायाः कलङ्क ऋण एव"।

मेरी। भवान् परभूषासुसज्जकः—परमभूषणसुशोभितः।

ह्यारिः। अर्थात् त्वं युरोपीयवेशसमाच्छादितः कुलाङ्गारः।

मेरी। भवान् "पटुभाषः" भाषणपटुः।

ह्यारिः। अर्थात् त्वं काकः कृष्णमूर्तिर्धुरन्धर एव।

मेरी। भवान् "महाप्राणः" महानुभावः।

ह्यारिः। अर्थात् त्वं "द्रोणकाकः" घोरकृष्णवदनः परापकारकः कर्कशभाषी मयूरपुच्छधारी काकः।

मेरी। भवान् "परभृच्छावपालकः" परेषां भरणपोषणकारकः, भारतीयशिशूनां पितृवत् पालकः।

ह्यारिः। अर्थात् त्वं कोकिलशावकपालकरूपः काकः।

मेरी। भवान् "विलायतप्रमोदी" मिचुकाणामानन्ददायकः, अर्थाद् दीनपालकः।

ह्यारिः। अर्थात्, त्वं विलायतभक्तः साहेबपदलेही।

मेरी। भवान् "विदग्धाननशोभकः" पण्डितश्रेष्ठः।

ह्यारिः। अर्थात् त्वं दग्धाननो वानर इत्यर्थः।

मेरी। "कलिप्रियः" अस्मिन् कलियुगे सर्वेषां प्रियः।

ह्यारिः। अर्थात्, त्वं धूर्तमर्कटो वानर इत्यर्थः।

मेरी। "स्वकार्योद्धारसाधकः" कर्मवीरः।

ह्यारिः। अर्थात् त्वं परस्वापहरणपूर्वकम् उदरपूर्तौ सुचतुर इत्यथः।

आमओयेलः दोयारकिन्सनश्च। साधु! साधु! परम-मनोहरं सङ्गीतमिदम्।

दोयारकिन्सनः। सारात्सार! एष सत्यमेव परमचतुर उपहार-योग्य एव।

आमओयेलः। तस्मात् पञ्च मुद्रा अस्मै देहि। (इति पञ्च दोयारकिन्सनस्य हस्ते ददाति) [जनान्तिकं] गुप्तचरकार्यविषये त्वं ब्रूहि।

दोयारकिन्सनः। (पञ्चमुद्रातश्चतुर्मुद्राः स्ववस्त्रकोषे संरक्ष्य मुद्रामात्रं ददाति।)

ह्यारिः मेरी च। (आमओयेलमुद्दिश्य) नमस्ते भूयो भूयः।

असारे खलु संसारे सारात् सार सुखं भज।

दोयारकिन्सनः। ह्यारे! मया साकं बहिरागच्छ।

(उभौ निष्क्रान्तौ)

आमओयेलः। (मेरीं सस्पृहम् अवलोक्य)—मेरि! दश मुद्रास्त्व गृहाण। अदूरे दृश्यते मे प्रासादः सर्वेषां सुपरिचितः "आमओयेल साहेब कुटिः" इति ख्यातः। तत्र निश्चितम् एहि।

मेरी। [छलनामुखेन विहस्य] मम पतिरपि मया सह गमिष्यति।

आमओयेलः। सुन्दरि! त्वमेकाकिन्येवागच्छ।

मेरी। कथमेकाकिनी गमिष्यामि ?

( आमओयेलः चक्षु:संकेतं करोति। )

मेरी। ( सक्रोधम् ) अयि दुश्चरित्र महासाहेव ! एतदेव भवतः स्वरूपम् ? आंगलशिक्षाप्रलेपेनापि तव पूतिगन्धि मनो न गूहितमास्ते। स्वदेशनिन्दने नास्ति ते त्रुटिः, अथ च नारीमनोविलोभने चातुर्यमतुलं दर्शयसि। तस्मात् पश्य मम पारपार्थिकं रूपम्।

( नारीवेशं हित्वा )

रे रे भ्रष्टाचार, देशकलङ्क !

देहोऽयं दृढबन्धनः सुघटितः कालायसेनेव मे
दोर्दण्डावपि कालदण्डकठिनौ पाषण्डिनां भीषणौ।
एष त्वां शिखिपिच्छधारिकरटं स्त्रीलम्पटं दुर्जनं
पिष्ट्वा कर्दमपेषमाशु शमनागारं ध्रुवं प्रापये ॥६६॥

आमओयेलः। यः पलायते स जीवति।

———

# पञ्चमोऽङ्कः

## प्रथमं दृश्यम्

[ श्रीरामकृष्णः स्वकक्षे समुपविष्टः । प्रविशति लक्ष्मीनारायणमाड़ोयारी ]

लक्ष्मीनारायणः । [ स्वगतम् ]

कामिनीकाञ्चनत्यागी पुरुषोऽयं महत्तमः ।
यद्यर्थं मे न गृह्णाति मात्रे दास्यामि तं ध्रुवम् ॥६७॥

प्रार्थये भगवान् महतीम् आशां मे पूरयत्विति ।

[ श्रीरामकृष्णमुपसृत्य ] भगवन् !

त्यक्तः काञ्चनकामिनीपरिचयो देवेन दीर्घाद् दिना-
देतन्मे विदितं तथापि भगवन् प्राप्तोऽस्मि ते सन्निधिम् ।
एषा सानुनयं सभक्ति पदयोर्दासस्य तु प्रार्थना
मुद्राणामयुतं युतः करुणया गृह्णातु देवो मम ॥६८॥

श्रीरामकृष्णः । ( स्वगतम् ) मातर्जगदम्बिके ! बहोः कालादनन्तरं कथं भूयोऽपि प्रलोभनकारणम् उपस्थापयसि ? [ लक्ष्मीनारायणमुद्दिश्य ] नाहम् एतद्ग्रहणे समर्थोऽस्मि, नाहं समर्थोऽस्मि ।

लक्ष्मीनारायणः । देव ! भवताम् एतद्विषये वैमत्यं चेज्जनन्येव दशसहस्रमुद्राः परिगृह्णातु । तेनापि मे महान् आनन्दो भविष्यति ।

श्रीरामकृष्णः । इच्छति चेत् सा ग्रहीतुमर्हति । एनां पृच्छामि । रामलाल ! तव खुल्लतातपत्नीमत्राह्वय ।

[ प्रविशति जननी सारदामणिः ]

रामकृष्णः । [ सारदामणिमुद्दिश्य ] एष लक्ष्मीनारायणो मत्सेवार्थं दशसहस्रमुद्रा दातुकामोऽत्रागतः । किन्तु काञ्चनत्यागिना मया नायम् अर्थो ग्रहणीयः इत्युक्तोऽयम् इच्छति त्वयैव दशसहस्रमुद्रा गृह्यन्तामिति ।

लक्ष्मीनारायणः। देवि! भवती तावद् एतमर्थं परिगृह्णातु। हृदि मेऽभिलाषो महान् भवतोरेक एतमर्थं परिगृह्णात्विति।

सारदामणिः। [श्रीरामकृष्णमुद्दिश्य] आर्यपुत्र! कथं तद् भविष्यति। मत्सकाशे संरक्षितमर्थं भवदर्थमेव व्ययितं भविष्यति। नाहमन्यथा कर्तुं पारयिष्यामि। अतो नैषोऽर्थो मयापि ग्रहणीयः।

श्रीरामकृष्णः। श्रुतं त्वयाऽनया यदुक्तम्। तस्मान्नैषोऽर्थ आवयोः केनापि ग्रहणीयः।

लक्ष्मीनारायणः। भगवदिच्छैव बलवती।

(सर्व प्रस्थिताः)

——

# पञ्चमोऽङ्कः

## द्वितीयं दृश्यम्

[ स्थानम्—दक्षिणेश्वरे रामकृष्णमन्दिरम्     कालः—पूर्णिमारजनी ]

[ परमहंसदेवः समुपविष्टः। परितः श्रीकेशवचन्द्रसेनः, भक्तभैरवो गिरीशचन्द्रः, श्री "मः", श्रीबलरामवसुः, श्रीनरेन्द्रः, श्रीप्रतापचन्द्रमजुमदारः, श्रीलाटुमहाराजश्च। ]

रामकृष्णः। ( सङ्गीतम् )

मातरशरणं दर्शय चरणं भीमभवार्णवतीरनिषण्णम्।
तव गुणकीर्तनमुखरितजीवनमेनं तारय सपदि विपन्नम्॥६६॥
भोगाद्विरतं योगे निरतं किमु मामवधीरयसि कराले।
यमभयशासनमरुणपदाङ्कनमिह मम हृदये कुरु ते काले॥७०॥

केशवचन्द्रः। अपूर्वम् अपूर्वम्!

किन्तु यामिन्या दशघटिका गता। मया त्ववश्यमेव प्रत्यावर्तनीयं कलिकातानगर्याम्।

प्रतापः। केशवचन्द्रमहाशय! नहि नहि। अद्य रात्रौ भवान् अत्रैव स्थास्यति।

रामकृष्णः। ( सस्मितम् ) किन्त्वभ्यासो बलवान्। अभ्यस्त-कक्षो स्वशय्यायां सुखं स्वपिति केशवचन्द्र-महाशयः। अत्र तु यदि तस्य निद्राया व्याघातः स्यात्? अपि जानन्ति भवन्तो मत्स्यजीविन्या उपाख्यानम्।

सर्वे। नहि, नहि, कृपया विवृणोतु भवान्।

रामकृष्णः। शृणुत। स्वगृहेऽतिथिरूपेण समागतां काञ्चन मत्स्यजीविनीं मालाकारपत्नी प्राह—"भगिनि! कथं त्वं विनिद्राऽसि?' मत्स्यजीविनो प्राह—"भगिनि! तव कक्षस्याभ्यन्तरे निहितानि पुष्पाणि तीव्रमधुरं सौरभं विस्तारयन्ति। तस्मान्मम निद्राव्याघातो जातः। अत एव प्रार्थये, मम मत्स्यपेटिकां शीघ्रम् अत्रैव कक्षे आनय।"

आनीतायां तु मत्स्यपेटिकायाम्, सा धीवरपत्नी पेटिकोपरि जलसेचनं कृत्वा मत्स्यगन्धेन प्रपूरिते कक्षे सुखेन निद्रां गता। इति। एवमेव—

आमिक्षाघृतशर्करादिरचितान् सन्त्यज्य सन्मोदकान्
काकः काङ्क्षति पूतिगन्धिगलितान् काकोदरानादरात्।
कर्पूरं हविरुग्रगन्धकुसुमं नैके सहन्ते नरा
लोके वासनया स्वया जनिमतां भिन्ना रुचिर्जायते ॥७१॥

[ सर्वे उच्चैर्हसन्ति । ]

केशवचन्द्रः। (स्वगतम्) अहो आश्चर्यम्! न जाने किं नु संघटितम्। नाहम् अस्मात् स्थानादद्य गन्तुमुत्सहे। अपूर्वमिदं स्थानम्!

ऊर्ध्वे पीयूषवर्षी हसति हिमकरो निम्नतः पुण्यतोया
शान्तस्निग्धोर्मिरम्या वहति कुलुकुलुध्वानिनी जह्नुकन्या।
अग्रेऽसौ शुभ्रकान्तिर्वसति शुचितनुस्तापसो रामकृष्णो
योगादेतत्त्रयाणां स्थलमिदमभवत् पावनं तीर्थभूतम् ॥७२॥

रामकृष्णः। धर्मप्राण केशव! किं चिन्तयति भवान्? चिरमत्र तिष्ठतु। एष एव समयोऽन्तरङ्गालपनस्य।

केशवचन्द्रः। देव! सुष्ठु भणितं भवता।
भवान् भगवतो मातृरूपस्य समुपासकः। मयाऽपि तदेव मातृरूपं श्रेष्ठं मन्यते। अस्मिन् स्निग्ध-शान्त-निशीथे, शान्त-धीर-मूर्तेर्भवत एतन्निगूढतत्त्वस्य सारं ज्ञातुमिच्छामि।

रामकृष्णः। तर्हि शृणु। प्राथम्येन सर्वे वदत—"भागवतो भक्तो भगवान्।" इति।

सर्वे। "भागवतो भक्तो भगवान्।"

रामकृष्णः। अस्यार्थः—भगवतो भागवतत्वाद् वेद-पुराण-तन्त्रादयः पूजार्हाः। प्रकारान्तरेण भगवान् एव भक्तः, यतो भगवान् भक्तस्य हृदये वसति। भक्तस्य हृदयमेव तस्य विहारस्थानम्। तस्मि-

ह्लीँलानिकेतने स सर्वदा दृश्यत एव। ततो भक्तस्य पूजा भगवत एव पूजा। पुनरपि वदत "ब्रह्मैव शक्तिः, शक्तिरेव ब्रह्म" इति।

सर्वे। "ब्रह्मैव शक्तिः, शक्तिरेव ब्रह्म।"

रामकृष्णः। यद् यूयं ब्रह्म वदथ. तदेव मम मतानुसारेण माता। "मातः. मातः, मातः"। मधुरतमं कोमलतमं, स्निग्धतमं शीतलतमं पवित्रतमं नाम 'माता'। सैवाद्या शक्तिः। सैवानन्दरसघना। तस्या एवानन्देनानन्दमधुरं जगत्।

आनन्दझंकारि पतत्रि-कूजितम्
आनन्दसंचारि सुकोमलं तृणम्।
आनन्दविस्तारि सुशोभनं वनं
सत्यं जगत् सुन्दरसुन्दरं वरम् ॥७३॥

गिरीशः। अहो ! मधुरिममयीयं वाणी। भगवन् ! अतृप्ता खल्वस्माकं पिपासा। अतोऽप्यधिकं श्रोतुमिच्छामः।

रामकृष्णः। शृणुत। अयमेव मातृभावः सर्वसाधनस्य परमा चरमा च कथा। "त्वं जननी, अहं तव सन्तानः"—अतोऽधिकं गभीरतत्त्वं किमपि नास्ति। पश्य,

किमिह मधुरमास्ते मातृनाम्नो धरायां
किमिह च कमनीयं वर्तते मातृचित्तात्।
किमिह भवति शीतं मातुरङ्कादशङ्कात्
किमिह कलुषमुक्तं मातुरङ्घ्रिद्वयाद्वा ॥७४॥

अत एव, मम भावो मातृभावः, मम साधनं मातृसाधनम्, मम सिद्धिर्मातृसिद्धिः।

श्री"मः"। धन्या वयं श्रीश्रीरामकृष्णकथामृतसिक्ताः। भगवन् ! कृपया शक्तितत्त्वविषये कामपि ज्ञानामृतकणिकाम् अस्मभ्यं वितर।

रामकृष्णः। ब्रह्म तस्य शक्तिश्चाभिन्ने एव। यथा अग्नेर्दाहिका शक्तिः, सूर्यस्य प्रभा, दुग्धस्य धवलता च। यद् वाङ्मन-

सयोरतीतं निर्गुणं निष्क्रियं, तदेव ब्रह्म। यदा तदेव ब्रह्म सृष्टि-स्थिति-लयकार्याणि संघटयति, तदा तद् आद्या शक्तिरिति कथ्यते।

केशवचन्द्रः। यदि भगवान् एक एव, तदा कथं धर्मविषये एतादृशा वादविसंवादा वर्तन्ते ?

रामकृष्णः। तत् त्त्वज्ञानस्य विषमय-फलम्। परतार्थत एकमेव वस्तु केवलं नामानि भिन्नानि। यथा, वारि प्राणहेतुकं स्निग्धसुशीतलं वारि एकमेव, शाश्वतकालम् अभिन्नसत्त्वम्; केवलं नामानि भिन्नानि— "जल", "पानि", 'ओयाटार" इत्यादिक्रमेण।

अत एव, तस्यैकाद्वितीयस्य वस्तुनो लाभार्थं बहव उपाया वर्तन्ते। फलतः, "यावत्संख्यकानि मतानि तावत्संख्यकाः पन्थानः" इति। यथा छदेरुपरि गमनाय नानाविधा वर्तन्ते उपायाः - सोपानम्, वंशदण्डो, रज्जुरित्यादयः। तथा भगवत्प्राप्तयेऽपि बहव उपायाः, प्रत्येक-धर्मः स्वतन्त्र उपाय एव।

नरेन्द्रः। भगवन्! सिक्तं हृदयम् अस्माकं भवद्वाणीसुधाधारया। अन्योऽपि कश्चन प्रश्नोऽस्ति।

रामकृष्णः। प्राणानन्द! स्वच्छन्दं ब्रूहि।

नरेन्द्रः। धर्मसाधनस्य मूलमन्त्रः कः ?

रामकृष्णः। अतीव सरलः प्रश्नः, एकेन वाक्येनाप्यस्य समुत्तरं दातुं शक्नोमि। तच्च "जीवपूजाद्वारेण शिवपूजा" इति। ईश्वरो हि सर्वजीवेषु वसति, ततो जीवानाम् आराधना सेवा चेश्वरस्या-प्याराधना सेवा च। एष एव सर्वश्रेष्ठो धर्मः।

श्री"मः"। देव! केचन वदन्ति—स्त्रिया सह सन्न्यासधर्माचरणं शास्त्रविरोधि स्वानुभवविरोधि च। भवांस्तु तत्रैक एव महान् व्यतिक्रमः। अतो भवतो ज्ञातुमिच्छामि, साधनमार्गे नारीणां स्थानं कीदृशम् इति।

रामकृष्णः। अस्मच्छास्त्रानुसारेण नारीणाम् अधिकारः पुरुषतुल्य एव। वस्तुतो जगति सर्वा नार्य आद्यायाः शक्तेमूर्त-प्रतीक एव। जग-

ज्जनन्याः पूर्णविकाशो नार्याम्। अत एव परिचारिकां वृन्दामपि नाहं कदापि भर्त्सयितुं शक्नोमि।

श्री"मः"। अहो महानुभवता देवस्य !

रामकृष्णः। भूयोऽपि शृणु। स्त्रिया सह सन्न्यासधर्माचरणे का बाधा? वस्तुतः, स्त्री विद्यारूपिण्यविद्यारूपिणी च। विद्यारूपिणी स्त्री भगवत्सकाशं नयति, अन्या त्वीश्वरं विस्मारयति, संसारपङ्के निमज्जयति च।

नरेन्द्रः। (स्वगतम्) अहो! आश्चर्यकरी खलु नारीजातिं प्रति देवस्य सम्मानना। अत एव देवेन स्वीकृता साधनसमये गुरुरूपेण भैरवी योगेश्वरी। मातुः सारदामणेश्चरणे च पूजाच्छलेन समर्पितं साधन-फलं समग्रमेव फलहारिणीकाल्याः पूजादिवसे। एतस्य सर्वमेव असाधारणम् अचिन्तनीयम् अपूर्वम्!

केशवचन्द्रः। महाभाग! अधुनाऽहं साधयामि।

रामकृष्णः। भक्तश्रेष्ठ केशव! क्षणं तिष्ठ। सर्वे वदत "गुरुः कृष्णो वैष्णवः" इति।

सर्वे। "गुरुः कृष्णो वैष्णवः।"

केशवचन्द्रः। नाहं तत्पर्यन्तं प्राग्रेसरो भविष्यामि। सर्वे मां वैष्णव इति कथयिष्यन्ति।

रामकृष्णः। (विहस्य) बाढम्। भवतु। दीर्घकालव्यापिनी निगूढा-लोचना सुकठिनैव। ततस्त्वं नरेन्द्र! एकेन सङ्गीतेनास्माकं श्रोत्र-विनोदनं कुरु।

नरेन्द्रः। (गायति।)

जननि रे मुक्तकेशि! लसतु ते स्मितशशी।

कमचरण-कमले पावन-दामिनीराशिः ॥७५॥

निर्जन-गिरि-कन्दरे

विश्वमातः सारात् सारे!

स्फुरति ते रूपं वरं ततो मुनिर्गुहावासी ॥७६॥

